यदीय-सौधे बहुरत्नभासा नक्तन्दिवं ध्वस्त-तमिस्रजाले।
कुहूमुखीष्वेव कुरङ्गनेत्रास्तदा कुहू-शब्दमिति प्रतीयुः ॥४४॥
वसन् पुरे तत्र पुराङ्गनानां चक्षुश्चकोरैरपि पीयमानः।
वहन् प्रजाली-कुमुदप्रमोदं भूपालचन्द्रो भुवमाससाद ॥४५॥
भीतौ महत्यां शरणं प्रपन्नांश्चिराय योऽनन्यगतीनभीतः।
एकोऽप्युदन्वानिव भूमिपालः सहस्रशो भूमिभृतोऽभ्यरक्षीत ॥४६॥
अत्युग्रवीर्यस्य किमत्र वाच्यं माहात्म्यमेतस्य महीमघोनः।
चिरं शरण्यः शरणं प्रपन्नं योऽसावरक्षीदपि गुर्जरेशम् ॥४७॥
स पालयित्वाद्भुतसर्वसम्पत् क्षितिं क्षितीन्द्रो विधिवच्चिराय।
विन्यस्य पुत्रे श्रियमेष काले दिदृक्षयेव त्रिदिवं जगाम ॥४८॥
श्रिया तनोर्निर्जितकामदेवः श्रीकृष्णपादार्पितचित्तवृत्तिः।
श्रियोर्जितः पूजित-भूमिदेवः श्रीवीरभद्रः समभून्नृदेवः ॥४९॥
यस्मिन् क्षितिं पालयति प्रचण्डप्रतापसन्तापितदिग्विभागे।
अलक्ष्यदेहो मदनोऽपि लक्ष्यं प्रत्यायुधं तत्प्रभृतीव धत्ते ॥५०॥
यस्याङ्गनानां स्तनहेमकुम्भेष्वनङ्गरङ्गश्रमवारिबिन्दून्।
भियेव गच्छन्नतिमन्दमन्दं वातो हरत्याश्रिततालवृन्तः ॥५१॥
वीरेषु भद्रोऽयमिति प्रमोदात्तं प्राप्य कान्तं खलु वीरभद्रम्।
वसुन्धरोच्चैः शुशुभे स्त्रियो हि विशेषतो वीरजनान् भजन्ते ॥५२॥
वीरेश्वरात् प्राप्तगुरुप्रसादः श्रीवीरभद्रो नृपतिर्बभासे।
सोऽप्यद्भुतालौकिकवीर्यशाली भवन्ति देवांशभवा हि भूपाः ॥५३॥
सदैव यत्कीर्ति-विधुप्रताप-प्रभाकरांशुव्रजयोः प्रकाशात्।
प्रतीयिरे केवलमेव दीर्घैस्तदा रथाङ्गीविरुतै रजन्यः ॥५४॥
एणीदृशां प्रणयभङ्गभयातुराणामिन्दोः प्रतीक्ष्य परमस्तमनं स्थितानाम्।
एतद्यशस्ततिनिरस्ततमःसमूहा द्वारे निशा सुचिरमत्यभिसारिकाणाम् ॥५५॥
किं ब्रूमहेऽस्य नृपतेश्चतुरं प्रतापं तद्बाहुवीर्यकथनप्रथनच्छलाद् यः।
उद्भाव्य भास्करतिरस्करणप्रभावं दिक्सुन्दरीवदनचुम्बनमाततान ॥५६॥
कान्तः प्रताप इह नोज्झति मां मुहूर्तं सौभाग्यमात्मन इतीव निवेदयन्ती।
शुभ्रांशु-कान्त-विरहे मलिनप्रभावा आशाः समं भ्रमति तेन यदीयकीर्तिः ॥५७॥
चिरं चरज्ञात-पराभियोगः संनद्धपूर्व-स्थितवाहिनीकः।
स पूर्ववत् संमतसर्वलोकः शशास राज्यं वसुधासुधांशुः ॥ ५८ ॥

सोऽनेकभूपालनिबद्धसन्धिः प्रौढस्य कस्यापि महीमघोनः ।
अन्तर्मनाश्चेतसि गूढमन्त्र उज्जासयामास सुसज्जसैन्यः ॥५६॥
परस्परं मन्त्रविदां वरेण्यो द्वयोर्द्वयोर्भू मिभृतोर्विवादम् ।
दानेन सोल्पीकृत-कल्पशाखी प्रकल्पयामास वसन् स्वराज्ये ॥६०॥
वशीकृताभ्यर्णगतक्षितीन्द्रः स पूर्वपूर्वं प्रथमानवीर्यः ।
स्वयं सुसंभावितसैन्यशाली बली ततो दिग्विजये प्रतस्थे ॥६१॥
इति क्रमेणाप्यथ गूढमन्त्रो निर्वापिताशेषविपत्तदीपः ।
अनन्यसामान्य-गुणाभिरामः श्रीवीरभद्रो नृपतिर्बभासे ॥६२॥
स पण्डितः पण्डित-संमतः सन् विधानवित् कृत्यविधिं व्यधत्त ।
तथा हि ते कर्मणि धर्मकृत्ये महानुभावा द्विजमाश्रयन्ते ॥६३॥
यक्षेश्वरेणाप्यलकापुरीव पत्या सुराणाममरावतीव ।
अनन्यसाधारणया श्रिया भूस्तेनाबभौ भूपतिभूषणेन ॥६४॥
वनमिव मधुनोद्यत्कन्दलोद्भासिवृत्तं वियदिव हिमधाम्ना सर्वतस्तारतारम् ।
सर इव दिननाथेनोल्लसत्पङ्कजश्रि प्रमुदितजनरज्यं तेन राज्यं चकाशे ॥६५॥
चिरसमयमयं तां पालयित्वा प्रकामं धरणिमथ तनूजे प्रौढवीर्ये निवेश्य ।
द्विजकुलमतिदानैः प्रीणयित्वा वयोऽन्ते गतिमलभत पुण्यां सूरिभिः प्रार्थनीयाम् ॥६६॥

दोर्दण्डप्रबलप्रतापतपनव्यापन्नसर्वाहितः
श्रीमज्जामकुलप्रदीप उदितः श्रीशत्रुशल्यो नृपः ।
वाणीनाथकृतेऽस्य जामविजये तत्तद्गुणालङ्कृते
काव्ये पूर्वजनानुवर्णनविधौ सर्गस्तृतीयो गतः ॥६७॥

---

## [ चतुर्थः सर्गः ]

दिने दिनेशप्रतिमप्रतापः सन्मङ्गले मङ्गलराशिरेषः ।
अरातिचित्ताहितगाढशल्यो राज्येऽभिषिक्तः खलु शत्रुशल्यः ॥१॥
धन्या धरित्री बहुपुण्यभाग्या भोग्या भवित्री नृपजामकेतोः ।
इति स्तुतिं सर्वत एव सर्वे प्रचक्रिरे शक्रपराक्रमस्य ॥२॥
मुदा महत्या तरलीभवन्मना वपुश्च रोमाञ्चकुलाञ्चितं वहन् ।
पदे पदे तद्गुणराशिमुच्चरन् सुधारसस्नात इवास मानुषः ॥३॥

पयोधरप्रस्खलदम्बराञ्चलीससम्भ्रमासंवृतिलोलदोर्लतम् ।
सशब्दकाञ्चीरुचि नूपुरस्वनै-रनर्ति हर्षात् प्रतिवेश्म वेश्यया ॥४॥
छलार्धसंदर्शितपीवरस्तनी मितस्मिताकूतयुतोक्तिभाषिणी ।
महीपतेर्द्वारि महेभगामिनी ततान नृत्यं वर-वारकामिनी ॥५॥
नृपाभिषेकोत्सवदर्शनोत्सुकाः परस्परं न्यस्तकराः कुतूहलात् ।
निबद्धयूथास्त्वरया समाययुर्विचित्रवस्त्राभरणाः पुराङ्गनाः ॥६॥
तदा तदालोकनतत्पराणां पुराङ्गनानां परमोत्सुकानाम् ।
निरीक्षणैर्दीर्घतरैरभूवन् पुराणि नीलोत्पलतोरणानि ॥७॥
सीमन्तिनीनां वदनैः समन्ताद् भ्राजिष्णुशोभापटलैस्तदानीम् ।
सुधांशुबिम्बैर्विरमत्कलङ्कैः सहस्रसंख्यैरिव पूर्पूरि ॥८॥
तस्मिन् पुरे पौरवधूमुखानां निर्धूत-निःशेषतमःकथाभिः ।
प्रभाभिरासीदथ केवलं सा दीपावली मङ्गलसूचनाय ॥९॥
मुखेन पद्मं दशनेन कुन्दं स्मितेन जाती नवकेतकञ्च ।
बन्धूकमासीदधरेण तासामङ्गैश्च नानार्तवपुष्पजातम् ॥१०॥
पुरी विरेजे रचिता यथा यथा (?) मनोहरैर्मण्डनयोग्य-वस्तुभिः ।
उपात्तमल्ली मधुराधरस्मिता पतिवरा साभरणा वधूरिव ॥११॥
सुलोचनानामथ लोचनानि पेतुस्तदङ्गेष्वपि येषु येषु ।
निवृत्तिमीयुर्न हि तानि भूयः कामेन कोपादिव रक्षितानि ॥१२॥
निरीक्षमाणा वदनारविन्दं विलोचनेन भ्रमरेण काचित् ।
नावुद्ध तत्पार्श्वमुपागतापि मृदक्तिमाध्वीकरसं पिबन्ती ॥१३॥
कपोलदेशे पुलकं वहन्ती तथागतं तं परिलोकयन्ती ।
स्वेदाम्बुपूरस्तिमितस्तनश्रीश्चित्रार्पिता काचिदिवावतस्थे ॥१४॥
विलोकयन्ती वदनेन्दुशोभामङ्गञ्च कम्पोत्तरमावहन्ती ।
नावुद्ध काचिन्मदनाभिभूता मञ्जीरमेकं चरणच्युतं च ॥१५॥
गवाक्षदेशाहितलोचनान्ता रूपं तदीयं हृदि भावयन्ती ।
गृहेऽपि पर्यस्तसमस्तकार्या विवेद नान्या दिवसावसानम् ॥१६॥
चिरान्निवृत्ता कथमप्यवेद्य नृपासनस्थं खलु शत्रुशल्यम् ।
स्फुरद्गुणौघोत्तरलीकृताऽन्या जगे गुरूणां पुरतः स्थितापि ॥१७॥
तदङ्गशोभामितरेतरन्ता वामभ्रुवो नाम निरूपयन्त्यः ।
कुम्भस्तना अम्भसि हेमकुम्भांश्चिराय पूर्णानपि पूरयन्ति ॥१८॥

रहस्यमुष्य प्रतिबिम्बमेका सकम्प-हस्ताम्बुरुहं लिखित्वा ।
स्तनोपपन्नं स्मरबाणभिन्ना मुहुर्मुहुः श्लिष्यति मीलिताक्षी ॥१६॥
तदैव सेवाचतुरो वसन्तस्तं सेवितुं वै क्षितिपासनस्थम् ।
कटाक्ष-विक्षेपणशीर्ण-शत्रुं श्रीशत्रुशल्यं स्वयमाजगाम ॥२०॥
मधुव्रतोन्मत्तकरीन्द्रसादिना पुरःस्फुरत्कोकिलवृन्दवन्दिना ।
समीपचञ्चन्मृदुवातमन्त्रिणा समागतं तत्र वसन्तभूभृता ॥२१॥
कृत-प्रयाणस्य मधोर्महीपतेरुदीरयद्भिः श्रुतिमङ्गलध्वनिम् ।
द्विजैः समन्ताज्जयशब्दघोषणा व्यधायि यत्राशुभशंसिदर्शनैः ॥२२॥
पिपासवश्चन्दनमन्दवायवो मरन्दबिन्दूत्करबाष्पवाहिनीम् ।
नवीनपुष्पोत्सवशालिनीं लतां परिष्वजन्ते मुहुरानमन्मुखीम् ॥२३॥
वियोगिनी-लोलमनोमतङ्गजं विदारयन् किंशुकजालकैर्नखैः ।
प्रमत्तपुंस्कोकिलशब्दशोभितो वसन्तकालो हरिवत् समाययौ ॥२४॥
शीतात्ययेनोत्तरलीकृतात्मा ताराधिनाथोन्मुखितः कथञ्चित् ।
वशीकृताशेषजनः स दृष्ट्या बभूव रामप्रतिमो वसन्तः ॥२५॥

चञ्चद्वीचीगुरु-गिरिनदीतोयसंभारखिन्ना
मुक्तोन्मुक्ताः सुरतसमरश्रान्तिभाक्पन्नगीभिः ।
क्षीणाङ्गीनां मलयमरुतो ग्लानिमङ्गे हरन्ति
प्रायः क्लेशैरपि परहितं साधवः साधयन्ति ॥२६॥

अस्तं व्रजन्तं दिवसाधिनाथं कराग्रकेणाम्बरमादधानम् ।
मुमोच सन्ध्या कुलटा निरीक्ष्य तदोदयन्तं निकटे सुधांशुम् ॥२७॥
सरागमुद्गच्छति शीतरश्मौ तमोमलस्नानविशुद्धदेहा ।
दिक् पौरुहूती महसा विरेजे चिरागते कामिनि कामिनीव ॥२८॥
काश्मीरपङ्कारुणकोमलाङ्गी भाति स्म शोणाम्बरमादधाना ।
समुन्मिषत्-कैरव-वक्त्रबिम्बा सन्ध्या मदान्धा वरवर्णिनीव ॥२९॥
क्षणेन सन्ध्यामुपगम्य शर्वरीमुखं मुहुश्चुम्बति शीतधामनि ।
इतीव सापत्न्य-भवाभ्यसूयया प्रसह्य सन्ध्या मलिना निमीलिता ॥३०॥
निशामुखं सन्त्यजता कलावता निरूपितस्फीतकरावगूहना ।
कुमुद्वती बोधित-कैरवाननश्रिया स्फुरन्त्या हसति स्म शर्वरीम् ॥३१॥
चिरात् करस्पर्शमवाप्य हृष्टा कुमुद्वती कैरव-लोचनेन ।
भृशं भ्रमद्भृङ्गभराञ्जलौघव्यक्ताश्रुधारां निरमुञ्चदिन्दौ ॥३२॥

भानौ गतेऽस्तं मलिना नलिन्यः क्षणादमूमुद्रणमेव भेजुः ।
प्रायेण सौभाग्यजुषां प्रियाणां सुदुःसहो वल्लभविप्रयोगः ॥३३॥
चिरात् परिम्लान-निशारमण्याः स्नेहेन सार्द्री (?) भवता करेण ।
कान्तः कलावान् स्खलदन्धकारश्रेणी-सुवेणीं निरमोचयत् सः ॥३४॥
स्मराहवे शीत-मयूख-सन्ध्ययोर्य एव हाराच्छिदुराश्चकाशिरे ।
तयोर्विहारैकपदे हरेः पदे त एव तारास्तरला इवाभवन् ॥३५॥
निरीक्ष्य सायं नलिनी स्वकोशे निवेशयन्ती दल-सत्-कपाटम् ।
दिनाधिनाथागमनं प्रतीक्ष्य सौभाग्यलक्ष्मीमिव रक्षति स्म ॥३६॥
विनिर्मले वारिणि दीर्घिकायाः सुधांशुबिम्ब-प्रतिबिम्बमासीत् ।
कुमुद्वतीहर्षभवाश्रुपूरे चिरागतोऽयं विनिमज्जतीव ॥३७॥
ततो वियोगातुरमानसा सती रथाङ्गकान्ता करुणस्वना भृशम् ।
दिदृक्षयेव प्रतिदीर्घिकाम्बुजं गवेषयन्तीति विलापमातनोत् ॥३८॥
अभूदहो जन्म कुले पतत्रिणां मृणाल-कीलाल-कणान् समश्नताम् ।
ददासि तत्रापि ममेदृशीं दशां धिगस्तु सर्वाधिपतां विधे तव ॥३९॥
न तव दूये मदनो दुनोति यच्छरैः स्वभावात् पुरुषा हि निष्ठुराः ।
रते न ते काचिदुदेति वा दया बधूवधेऽस्मिन् कठिने वधूरसि ॥४०॥
इयं त्रियामा शतयामधारिणी सुधाकरादग्निरुदेति सर्वतः ।
तनोति तापं मृदुचन्दनानिलो विधौ विरुद्धे हि विपत् पदे पदे ॥४१॥
अयं कलावानुदयात् कुमुद्वतीं करेण काष्ठां वपुषैव शर्वरीम् ।
प्रमोदयन् भाति यतः कलावतामनन्यसाधारण एव विभ्रमः ॥४२॥
मा भूज्जनुस्तद् यदि नाङ्गनासु तत्रैव चेन्मास्तु वियोगवार्ता ।
सा चेत्तदा तत्क्षणमेव भूयादहो विधे मे वपुषोऽवसानम् ॥४३॥
कठोरकन्दर्पशराहतानां यच्चन्द्र तापं तनुषेऽङ्गनानाम् ।
त्वमोषधीशो द्विजराज एव स्तोत्रं किमेतद् भवतो भणामि ॥४४॥
क्षयी कलङ्की कतिधैव राहोः कठोरदंष्ट्रादलितोऽसि चन्द्र ।
तथापि मां दैवहतां दुनोषि नान्तर्मलात्मा दुरिताद् बिभेति ॥४५॥
मासि मासि तव विप्रयोगिणी रोहिणी भवति रोहिणीपते ।
सा तु दुःखमपि नो न्यवेदयद् यद् दुनोषि बहुधा वियोगिनीः ॥४६॥
सिताम्बरारोपिततारहारा हसन्मुखी लेपितचन्दनाङ्गी ।
शिरोरुहोद्योतितमल्लिमाला बालाऽभिसारं कुरुते सतीन्दौ ॥४७॥

काचिन्नवोढा प्रियविप्रयुक्ता मिथः सखीं पृच्छति बाष्पकण्ठी।
कान्ते प्रयाते किमनुप्रयाति निद्रा विनिद्राब्जदृशां निशासु ॥४८॥

कुतो धैर्यं बाले स्फुटमजनि कालेन मधुना
भजन्ते विश्रान्तिं क्षणमपि न कन्दर्पविशिखाः।
प्रियो दूरे दूरेऽवधिरिति वयस्यां सुकुशलां
ब्रुवाणां क्षीणाङ्गी कुसुमशयनेऽङ्गानि विदधे ॥४९॥

सदलयो दलयोगमुपागताः सम-रुता मरुतापि च कौसुमाः।
रुरुचिरे रुचि-रेणव उच्चकैः सुमनसो मनसोऽपि विकारिणः ॥५०॥

अबलया वलयाङ्कित एव मे कमलकोमलको भुजपल्लवः।
रतिशयाऽतिशयालसया कदा सुहृदयं हृदयं विनिवेश्यते ॥५१॥

रहसि कान्तमुपेत्य कलानिधिं मदनतन्त्र-विचारण-कोविदम्।
परमया रमयामि मुदेत्यभाद्वरजनी रजनी किल माधवी ॥५२॥

चिरदिनागत-कौतुक-सद्मनां हृदि विलासवतामुदिते मधौ।
सुनयनानयनाञ्चलचालनाः स्मरसरा रसराशिमुपादधुः ॥५३॥

मधुरयं समयो मधुरा निशा विधुरनूनकलो दयितं विना।
वरतनोरतनोत् परमप्रियं सकलकं कलकण्ठरुतं च यत् ॥५४॥

इह मधौ गतमायुधतां द्वयं रतिपतेर्हिमदीधितिकौमुदी।
समुदिता मुदितालिपदाहतिस्रुतरसा तरसा कुसुमावली ॥५५॥

श्रुतिसुखा कलकोकिलकाकली कुसुमितद्रुमराजि वनं बभौ।
इह मधौ हिमधौतसमृत्यये(?) सकमलं कमलं विमलः शशी ॥५६॥

रतिरणव्रणघर्मसमाकुलप्रणयिनीजनदेहपरिश्रमम्।
शमयिता मयि तापकरः परं कुमुदिनी मुदिनी हितधृग् विधुः ॥५७॥

अथ निशामधिगम्य निशाकरः कुमुदिनीमुखचुम्बनतत्परः।
गुरुभविष्णु-वियोगमलाशयो ध्रुवमसौ परिपाण्डरतां ययौ ॥५८॥

निशानाथः शेषाचलशिरसि भूपामणिरभूत् स्मयन्ते पद्मिन्यः करमरुणमालोक्य पुरतः।
समीरः प्रातस्त्यः सुरतसमरस्वेदनिकरान् स्तनाभोगे स्त्रीणामपनयति भूयः प्रिय इव ॥५९॥

विपद्वा सम्पद्वा न खलु चिरमेकस्य भवति
ध्रुवं पश्य क्षीणः शशभृदयमस्तं यदयते।
इतीवान्तर्घूर्णद्-भ्रमरभरनिर्घोषवचनै-
र्हसन्तीवानीचैरुषसि कमलिन्यः कुमुदिनीः ॥६०॥

गतेऽस्तं शीतांशौ क्षणमपि न रात्रिः स्थितवती
प्रियप्राणप्राणा भवति विमलात्मा किल वधूः ।
समुद्यन्तं रागारुणमपि करेणाम्बरतटं
दधानं चण्डांशुं सकृदपि न सा वीक्षितवती ॥६१॥

सदा मित्रप्रीतामपि कमलिनीं म्लानवदना-
मकार्षं दीप्तात्मा स्वयमपि करेण द्विजपतिः ।
इति व्रीडानम्रस्तुहिनकिरणो मित्रमनुगं
न सम्भाव्य प्रायो व्रजति मलिनः सत्वरपदम् ॥६२॥

सुरत-समरखेद-स्वेद-भास्वत्-कपोलं कनक-कदलकाण्डोद्द्योतितैकोरुदेशम् ।
उषसि शिथिलिताङ्गं व्यक्तपर्यस्तवस्त्रस्तनकलशनखाङ्कं कामिनी कापि शेते ॥६३॥

नवनखपदराजत्स्वेदपूरार्द्रपीनस्तनतट-विनिमज्जच्चारुचीनांशुकान्तम् ।
कथमपि विघटय्य प्रार्थयन्ती समीरं दयितहृदि निशान्ते कामिनी कापि शेते ॥६४॥

अयमुपगत इत्यौत्सुक्यसोत्कण्ठमश्रुप्रकर-पिहित-दृष्टि-द्वारमालोकयन्त्यः ।
कथमपि विरहिण्यो यामिनीं यापयित्वा नवनवमभिलाषं चेतसा चिन्तयन्ति ॥६५॥

संसिक्तांसा नयनसलिलैर्हस्तविन्यस्तमूर्धा
स्मारं स्मारं प्रियतमवचो जल्पितं यद्रहःसु ।
श्वासोद्रेक-प्रचलदधरं शुष्यदास्यं निषण्णा
तल्पप्रान्ते चिर-विरहिणी यामिनीं तामनैषीत् ॥६६॥

चञ्चत्-काञ्चि-क्वणितवलयं मञ्जुमञ्जीरघोषं
निर्गच्छन्त्यः शयनभवनात् प्रातरालस्यभाजः ।
वक्षोजान्ताननिलविचलच्चेल-चञ्चन्नखाङ्कान्
रेजुर्नम्रा गुरुजनपुरः पाणिनाच्छादयन्त्यः ॥६७॥

नृपतिरथ स जामः पूजयित्वाऽर्थकामान् प्रमुदितपुरलोकैः स्तूयमानः समन्तात् ।
रतिपतिरिव रत्या सम्पदा सङ्गतोऽयं मधुरजनिमनैषीत् सर्वतः पूर्णकामः ॥६८॥

दोर्दण्डप्रबलप्रतापतपनव्यापन्नसर्वाहितः
श्रीमज्जामकुल-प्रदीप उदितः श्रीशत्रुशल्यो नृपः ।
वाणीनाथकृतेऽस्य जामविजये तत्तद्गुणालंकृते
काव्ये पूर्वजनानुवर्णनविधौ सर्गश्चतुर्थोऽभवत् ॥६९॥

---

## [ पञ्चमः सर्गः ]

प्रबोधितो दुन्दुभिनिस्वनेन प्रातः समुत्थाय स मानितार्थी ।
शुश्राव गीतान्यथ वन्दिवृन्दैरुद्गीयमानान्यथ मङ्गलानि ॥१॥
ततः कृतस्नानविधिविधानात् कृताङ्गरागो हरिचन्दनेन ।
नानाविधैश्चन्दनपुष्पधूपैः श्रीरामपादार्चनमाततान ॥२॥

वामांसे किल यस्य मैथिलसुता श्रीलक्ष्मणो दक्षिणे
बिभ्रद्दक्षिणपाणिना शितशरं सव्येन सज्यं धनुः ।
सानन्दं मृदुलानिलाहतिचलद्राजीवराजीक्षणो
ध्यातोऽनेन पयोदसुन्दरतनू रामोऽभिरामो हृदि ॥३॥

इतीव रोमाञ्चसमञ्चिताङ्गो निवृत्तबाह्येन्द्रियचेष्टितोऽयम् ।
आनन्दसन्दोहनिमग्नचेता नेता चिरं ध्यानपरो बभूव ॥४॥
संपूज्य पूज्यं विधिवद्विधिज्ञः स प्रीणयित्वा द्विजपुङ्गवानाम् ।
साम्राज्यलक्ष्मीरचिताङ्गवेषो बहिर्गतः सोऽथ महीमहेन्द्रः ॥५॥
महार्घ्यरत्नैरतिशोभमानं परिस्फुरच्चामरवीज्यमानम् ।
सिंहासनं सिंहपराक्रमोऽयं श्रीशत्रुशल्यः क्षितिपोऽध्यवात्सीत् ॥६॥
कीर्तीन्दुविद्योतितदिग्विभागमनेकदेशागतसत्कवीन्द्राः ।
नानाविधैस्तव्यवचोभिरेवं तं तुष्टुवुर्भूपति-मौलिरत्नम् ॥७॥
यः पुण्डरीकनयनो भवति स्वभावाच्छ्रीमान् भवान् विरचितो विधिनेति मत्वा ।
मन्येऽहितेष्वपि सुदर्शनयुक्त आस्ते श्रीशत्रुशल्य पुरुषोत्तमतां गतोऽसि ॥८॥
श्रीशत्रुशल्य भवतो भवतोषकारिन्नेष प्रतापतपनस्तपनान् महीयान् ।
संमोहयन् कुवलयं परचक्रमुच्चैः संन्तापयन्नुदयते दयते परस्य ॥९॥

क्षुभ्यत्-प्रत्यर्थि-पृथ्वीपति-हृदयसरस्तोयशेषं दधाने
त्वद्दोर्दण्डप्रतापे तपति बहुगुणाराम [जाम] क्षितीन्द्र ।
सूर्यो मित्रत्वमागात् समजनि दहनः कृष्णवर्त्मा निमज्जन्
पारावाराम्बुपूरे निवसति वडवावह्निरन्यत् किमूह्यम् ॥१०॥

अवनिरमण जाम त्वत्प्रयाणे विपक्षक्षितिपतय उपेयुः शूलिनोऽनेकरूपम् ।
भ्रमति भुवि कपाली कोऽप्यभूत् कृत्तिवासाः क इह गरलकण्ठो भूतिभृत् कोऽपि कोऽपि ॥
अनारत-परिस्खलन्नयनवारिधाराशतप्रवृद्ध-पथि-निम्नगा-सलिलरुद्धयानोद्यमा ।
त्वदीय-रिपुकामिनी बहु-विदेशयानैषिणी विनिन्दति चलद्दृशा गुरुरुषा भृशं प्रावृषम् ॥

शुचाकुलितचेतना नरपते भयार्तेक्षणा
दिगन्तगिरिकन्दरान्तरतमःसु संचारिणी।
निजानन-मरीचिकाकवलितान्धकारच्छटा
विपक्षहरिणेक्षणा बहुविधं विधुं निन्दति ॥१३॥

एषा पूर्णसुधांशुमण्डलमुखी सिन्दूरपूरायित-
प्रातस्त्यार्कविभातभालफलका तारौघहारोदया।
ज्योत्स्नाजाल-पटान्तवीतहिमवत्-कैलासशैलस्तनी
देव त्रीणि जगन्ति मोहयति ते मूर्त्येव कीर्तिर्नटी ॥१४॥

वेणीमानमयन्ति कालभुजगीबुद्ध्या भुजङ्गाशना
व्यालुम्पन्ति मुखं चकोरनिकराः संपूर्णचन्द्राशया।
आक्रामन्त्यपि नीलनीरजधिया नेत्रद्वयं षट्पदाः
कान्तारेऽपि तवारिवारिजमुखी न स्वास्थ्यमालम्बते ॥१५॥

अवचेतुं कांक्षन्त्यः कल्पमौलिमण्डनं कुसुमम्।
क्षितिपतिजामचरित्रं सुरपतिसुदृशोऽभिगायन्ति ॥१६॥

माद्यन्मातङ्गसङ्गस्खलदतुलमदाम्भोभिरासन् प्रयाणे
नद्यः सद्यः समन्तादिति जहति शुचं शात्रवः शात्रुशल्य।
विभ्राजद्वाजिराजिप्रखरखुरपुटोद्धूतधूलीभिरुच्चै-
र्निस्तोयास्ताः समस्ता इति हृदि दधते देव चिन्तां दुरन्ताम् ॥१७॥

इदं युक्तं सिक्ता नयनसलिलैर्वैरिसुदृशां यशोवल्ली राजञ्जनयतुतरां पल्लवशतम्।
प्रकारोऽयं कस्ते निरवधि पुनस्तासु यदयं प्रतापाग्निर्मग्नोऽपि च वितनुते तापमतुलम् ॥१८॥

यो मेघनादमजयद्धनुषाऽतिघोरघोषेण योऽरिमवधीदतिकायमाजौ।
यो रामचन्द्रपदमञ्चति यः सुमित्रोन्मीलत्सुखो भवसि लक्ष्मण एव जाम ॥१९॥

नेत्रद्वन्द्वमिवाम्बुवाहनिवहा मुञ्चन्ति पाथोलवान्
कम्पन्ते परितस्तनूतरतनूवल्लीव विद्युल्लताः।
बन्धूकं चलयन्ति नीपमरुतः श्वासा इवोष्ठश्रियं
प्रारम्भः सम एव वैरिनृपतेरेणीदृशः प्रावृषः ॥२०॥

हठादुद्यद्धारा स्वयमतनुसंग्राममहिता परश्रेणी-कण्ठ-ग्रहणरभसं संरचयती।
विभोर्हस्तन्यस्ता विचलदपिधाना नवपयोधरश्रीस्ते भाति स्फुरदसिलता-वारवनिता ॥२१॥

कथमपि च लिखित्वा जामभूभृद् भवन्तं रहसि रभसमुग्धा वैरिभूपालबाला।
मनसिजनृपशोभामालि पश्याशु हृष्यत्तनुरुहवलिताङ्गी गाढमालिङ्गतीति ॥२२॥

रूपैर्गुणैः स्मर इति प्रथितं पृथिव्यां श्रीशत्रुशल्यमवला नु बलाद् भजध्वम्।
कामः शरैरपि तनूकुरुते शरव्यानेकोऽपि दृष्टिपतनैरतनूकरोति ॥२३॥

स्तोत्रं श्रोत्रसुखं विचित्ररचनारम्यं यथार्थोदितं
संशृण्वन् मुदितात्मभिः कविवरैः सम्पूर्णमावर्णितम।
तांस्तांस्तत्र महेभचारुतुरगद्रव्यैश्च सम्भावयन्-
श्रीमाञ्जाममहीपतिर्न्यविशात स्वच्छन्दमन्तःपुरम् ॥२४॥

ततो विशीर्णच्छदशाखिशाखानिषण्णमूर्च्छागतपक्षिपङ्क्तिः।
मरीचिकाव्याप्तदिगन्तरालो निदाघकालो वलतेस्म सद्यः ॥२५॥
मध्याह्नकालप्रथमानभानुभानूत्कराधूपितधूलिराजिम्।
विसृज्य पन्थानमथाध्वनीनाश्छायातरूनाश्रितवन्त एव ॥२६॥
प्रचण्डरश्मिप्रबलप्रतापभियेव सङ्कोचमुदीरयन्ती।
महीरुहैर्नोन्मुमुचेऽङ्कलीना च्छाया नवीना तरुणैरिव स्त्री ॥२७॥
रहस्युदञ्चद्घनघर्मपूरे पयोधरे सान्द्रनखाङ्कभाजि।
करेण सीत्कारपरं तरुण्यः क्लेशेन वासोऽञ्चलमुन्नयन्ते ॥२८॥
उल्लास्य भूयो भुजवल्लिमेका रहःस्थले कञ्चुकिकामुदस्य।
समुच्छलत्स्वेदकुलाकुलाङ्गी समीरणाय स्पृहयाम्बभूव ॥२९॥
कयापि कान्तोरसि चन्दनार्द्रे घर्मांशुतप्ताऽहमिति ब्रुवत्या।
उदञ्चिरोमाञ्चपयोधरान्तं वक्षो मृगाक्ष्या विनिवेश्यते स्म ॥३०॥
अन्तर्वियोगानलतापभाजि बहिः प्रतप्तेऽंशुभिरुष्णरश्मेः।
प्राप्तो वधूवक्षसि पांशुभावं निवेशितः सन् घनसारपङ्कः ॥३१॥
भृशं विशुष्यत्कमलाननश्रीस्तप्ताम्बुपर्याकुलमीनदृष्टिः।
शुचौ शुचेवालिविमुक्तपार्श्वा वधूर्वियुक्ता सरसीव रेजे ॥३२॥
स्तनान्तराले घनचन्दनार्द्रे सुवर्णकुम्भस्तनशालिनीनाम्।
निदाघदाहव्यतिघूर्णिताङ्गः सुखं स्म निद्राति चिरं मनोभूः ॥३३॥
वियोगवल्ली दिवसावसानच्छायेव वृद्धिं सुदृशोऽभ्युपैति।
प्रचण्डधाम्नः किरणा इवास्या मनोरथा निर्वृतिमाशु भेजुः ॥३४॥
निदाघमालोच्य तथा प्रवृद्धं श्रीशत्रुशल्यो जितसर्वशत्रुः।
विलासिनीभिः सुखितो विलासी विहर्तुमैच्छद् गृहदीर्घिकासु ॥३५॥
हृतार्कतापां द्रुमपल्लवेन सुस्निग्धकान्ताकरसोदरेण।
समीरणान्दोलितचारुवीचिं स दीर्घिकां भूपतिरीक्षते स्म ॥३६॥

समुद्गतस्वेदलवार्चितानां समुच्चरन्नूपुरशिञ्जितानाम् ।
मध्ये वधूनां विरराज राजा स्फुरन् कलावानिव तारकाणाम् ॥३७॥
विन्यस्य गाढं स्फुरदङ्गदानि मुहुर्मुहुः संयतनीविबन्धाः ।
परस्परव्यापृतपद्महस्तास्तेरुस्तरुण्यस्तरलायताद्यः ॥३८॥
सुमृष्टनेत्रैर्वदनैस्तदानीं तासां विलोलानलकान् वहद्भिः ।
सा दीर्घिका निर्गतपङ्कजापि सभृङ्गपङ्केरुहसम्पदासीत् ॥३९॥
परस्परं वक्त्रविलोकनेन जातभ्रमा वामदृशस्तदानीम् ।
सरोजबुद्ध्या वदने कराग्रं विन्यस्य लज्जानमदास्यमासन् ॥४०॥
निमज्य बालाऽम्भसि रोमराजिं शैवालवल्लीति विलोलचेताः ।
भूयोऽञ्चलेन व्यपसारयन्ती साकूतमेषा हसिता सखीभिः ॥४१॥
अङ्गेषु लीनं वसनं वहन्ती समुत्थिता काचन वारिमध्यात् ।
पयोधरे व्यक्तनखक्षतानि सञ्छाद्य तस्थौ भुजपल्लवेन ॥४२॥
सुमृष्टताराणि निरञ्जितानि लोलेक्षणान्यम्बुविहारिणीनाम् ।
विरेजुरालीढमधुव्रतानि वातेरितानीव सिताम्बुजानि ॥४३॥
परस्परं चञ्चललोचनानां वितन्वतीनां सलिलाभिषेकम् ।
जलाभिपूर्णाङ्गुलयः करौघाः फुल्लाम्बुजानीव विसानि रेजुः ॥४४॥
ततस्तरुण्यः सभयं पयोभिः सलीलमुद्यत्तनवोऽभ्यषिञ्चन् ।
राजानमाजानुविराजमानभुजं यथा सत्तडितोऽम्बुवाहम् ॥४५॥
समन्ततो वारिविलासिनीभिस्तेजोविशेषैः स्फुरता च राज्ञा ।
सरो रराजेव नभो विराजत्ताराभिरारात् स्फुरतेन्दुना च ॥४६॥
ततोऽवसाने दिवसस्य कामी स कामिनीभिः सरसः सकाशात् ।
शुद्धान्तमागात् पुरसुन्दरीभिः समं मरुत्वानिव मानसस्य ॥४७॥
तं निदाघमपनेतुमथास्य प्रावृषोन्नतपयोधरलक्ष्म्या ।
शीकरार्द्ररुचिराम्बरवत्या प्राप्तमुत्कलिकयेव युवत्या ॥४८॥
तत्र वीक्ष्य वियदम्बुदनद्धं कामिनः किल विलासविलोलाः ।
आदरेण कुतुकाशयमित्वा मन्दमन्दमवलाजनमूचुः ॥४९॥
प्रावृडेति पुलकस्य कदम्बं बिभ्रतीव विकचार्धकदम्बम् ।
शश्वदुन्नततरित्तनुभङ्गीव्यञ्जितेङ्गितपदेव नताङ्गी ॥५०॥
अम्बुदः स्फुटतडित्कनकोद्यच्छृङ्खलो मदनमत्तमहेभः ।
केतकीकुसुमराजिपरागैर्मण्डितो जयति दिग्विजयाय ॥५१॥

केतकीविपिनगाहनखिन्नः शीतकम्प्रकरसंस्रिताङ्गः (?) ।
लीयते स्म मदनोऽतनुतप्ते शीतभीरिव वधूस्तनभारे ॥
सद्म सौधमयमभ्युदितश्रि पीवरस्तनभराश्च रमण्यः ।
यौवनं वपुरपूर्वविलासं लभ्यते सुकृतिभिर्घनकाले ॥५३॥
निष्पतन्त उपलम्भितमुक्ता बिन्दवोऽथ पयसां घनमुक्ताः ।
सेहिरे न खलु रुष्टमनोभूमार्गणा इव वियोगवतीभिः ॥५४॥
सान्द्रचन्द्रकिरणैः श्रितवाणैर्निर्जितं जगदिदं मदनेन ।
अम्बुदो दिशि दिशि प्रथमानो गर्जितैरिति निवेदयतीव ॥५५॥
षट्पदद्युतिमुषां जलदानां गर्जितानि परितो विनिशम्य ।
मूर्छितं विरहिणीभिरनीचैर्हुङ्कृतानि मदनस्य रुषेव ॥५६॥
पश्य पश्य सखि वारिधराङ्के लीयते क्षणमुदेति मुदेति ।
सोत्सुकं विरहिणीभिरजस्रं दृश्यते स्म तडिदुन्नमितास्यम् ॥५७॥
स्वं विलोक्य सुहृदं सुसमृद्धं मन्दमारुतविलोलकलापैः ।
नृत्यति स्म गिरिमूर्ध्नि मयूरैः के न मित्रविभवे ह्युदयन्ते ॥५८॥
बाष्पवारिपिहिताक्षिपुटेन स्वाङ्गुलीविधुरितश्रवणेन ।
नीयते कथमपि क्षणदा सा भीमगर्जिततडित् पथिकेन ॥५९॥
नेत्रवारिनिमिलत्तनुयष्टिः कान्तवर्त्मनिहितायतदृष्टिः ।
स्तम्भदेशमवलम्ब्य दिनानि द्वारि वारिजमुखी नयते स्म ॥६०॥
व्यग्रपाणि परिमृज्य दृगन्तं ध्वान्तनिष्कलितासु निशासु ।
विक्लवा विरहिणी प्रियमार्गं वीक्षते निपतदस्रमजस्रम् ॥६१॥
यान्ति लोलशफरीनयनान्तव्यञ्जितेङ्गितपदाः सरितोऽथ ।
प्रौढनार्य इव गाढमदेन व्यक्तफेनहरितोद्धतमुख्यः (?) ॥६२॥
उन्मदा घनरसातिशयेनावर्तनाभिपरिदर्शितभावाः ।
फेनभाररुचिहारकलापा जीवनेशमगमन् रसवत्यः ॥६३॥
अम्बुदोऽञ्जननिभैस्तिमिरौघैर्विद्युदुल्वणसुवर्णगुणेन ।
मार्जितेन बहुशीकरपूरैः सीव्यतीव भुवमम्बरभित्तिम् ॥६४॥
रोचनारुचिविडम्बिशरीरा नीलकञ्चुकभृतोऽभिसरन्ति ।
विद्युतो जलधरेष्विव लीना व्यक्तमेव तिमिरेषु तरुण्यः ॥६५॥
अम्बुदध्वनिसमाकुलचित्ता लोचनानि चकितं चलयन्त्यः ।
लोलबाहुलतया प्रियकण्ठं निर्भरं जगृहिरे प्रणयिन्यः ॥६६॥

यान्त्यमर्षविमुखी शयनान्तं वारिदध्वनिभिरेवमकस्मात् ।
विक्लवा प्रियमनल्पमुदञ्चच्चञ्चलाञ्चलकुचं परिरेभे ॥६७॥
इत्थमार्तवसुखं सह कामी कामिनीभिरनुभूय निकामम् ।
प्रावृषो विभवमीक्षितुमुत्कः प्रारुरोह जगतीं (?) जगतीशः ॥६८॥
अधिगिरितटमुद्यद्बर्हिणारावरम्यान् सलिलभरसमानीभूतनीचोच्चभूमीन् ।
मरकतमणिदामश्यामलारण्यदेशान् मुदमलभत भूपो वीक्षमाणो दिगन्तान् ॥६९॥
वहति बहुलविद्युद्वारिदानङ्गरङ्ग-श्रमजलकणजालं विक्षिपन् मन्दमन्दम् ।
अपि विकचकदम्बान्दोलनानन्दसिन्धुः कमलविपिनलीलाबान्धवो गन्धवाहः ॥७०॥
विकचकमलभास्वद्भृङ्गनेत्राञ्जनश्री-र्विपुलतरकदम्बप्रौढरोमाञ्चराजी ।
स्फुरदभिनवदूर्वाश्यामलाङ्गी तदानीं युवतिरिव सगर्वा निर्भरं भूर्बभासे ॥७१॥

दोर्दण्डप्रबलप्रतापतपनव्यापन्नसर्वाहितः
श्रीमज्जामकुलप्रदीप उदितः श्रीशत्रुशल्यो नृपः ।
वाणीनाथकृतेऽस्य जामविजये तत्तद्गुणालंकृते
काव्ये पूर्वजनानुवर्णनविधौ सर्गोऽगमत् पञ्चमः ॥७२॥

---

## [ षष्ठः सर्गः ]

अथाम्बुवाहा विरताम्बुगर्भा नभस्युदासीनतया विरेजुः ।
तथापि तस्याः खलु मानुषाणां भवन्ति तत्रातिथयो विशेषात्(?) ॥१॥
समुल्लसत्पङ्कजलोचनेन विनोदयन्ती तरुणानशेषान् ।
शुद्धाम्बरा गुप्तपयोधरश्रीः शरन्नवोढेव समाजगाम ॥२॥
मरालमालागममनोज्ज्वलाङ्गी भृङ्गावलीचित्रितचारुवेणी ।
राकानिशानायकवक्त्रबिम्बा प्रौढेव नारी शरदावभासे ॥३॥
पयोदकेशेषु विकृष्य रोषान्निष्काश्य सा कोकनदायताक्षी ।
वर्षावधूं स्वां श्रियमुन्नयन्ती प्रौढा सपत्नीव शरच्चकाशे ॥४॥
करैर्विकर्षन्नतिलम्बमान-पयोधरांस्तत्र दिशः सरागः ।
विकाशिकाशस्फुटहासलक्ष्म्या साकूतमर्कः शरदा निरैक्षि ॥५॥
शरत्सखीक्षालितमेघपङ्कात् स्फुरच्छशाङ्कागमशोभमाना ।
ततः प्रसन्नाम्बरशुद्धगात्री चिरादनीचैरुदियाय रात्रिः ॥६॥

मेघात्ययोऽभूदुदिताऽम्बरश्रीर्विशुष्कपङ्कोच्चयचारु वर्त्म ।
दिशः प्रसन्ना इति विप्रयुक्तामाश्वासयामास शरत् सखीव ॥७॥
शनैः शनैः शारदनिम्नगास्ताः सन्दर्शयन्त्यः पुलिनानि रेजुः ।
सम्भोगचिह्नानि विलज्जमाना यथा युवत्यो जघनस्थलानि ॥८॥
नद्यो घनं जीवनवृद्धिहेतुमवीक्ष्य सद्यः कृशतामुपेयुः ।
भवन्ति नूनं वरवर्णिनीनामाजीवकानि प्रियमूलकानि ॥९॥
कथञ्चिदुत्तीर्य घनादरण्यात्तडिद्‌वाग्नेर्मदनात् किरातात् ।
मनोमृगः शीकरजालजालान्नवा विशश्वास वियोगिनीनाम् ॥१०॥
तडिद्विलीना विरतैव वृष्टिर्न गर्जितं नाम्बुधरप्रकाशः ।
तथापि चेतो न वियोगिनीनां वर्षात्यये प्रत्ययलेशमेति ॥११॥
विनिर्मलं व्योम नितान्त (?) तारास्तारासु तारापतिराहितश्रीः ।
सरो विरोचिष्णु सरोजमाला मरालजालानि शरद्यराजन् ॥१२॥
रोचिष्णु रोची रचयंश्चकास्ति विशेषतः शीतमयूख एषः ।
रामाभिरामास्यललामधामतुलां तुलायामिव गन्तुकामः ॥१३॥
तुषारसम्पातविशीर्णपर्णैरुद्यन्मृणालैः कमलैः सरांसि ।
आश्लेषमात्राणि रतानि यूनां तन्वन्नथासीच्छिशिरप्रचारः ॥१४॥
कामोऽपि रामास्तनशातकुम्भकुम्भान्तराले निभृतं विभाति ।
दुर्वारनीहारभियेव तावद् घ्टोदये नैव सतां प्रकाशः ॥१५॥
वियोगिनीनां बहुबाष्पपूरैरासिच्यमाना तनुयष्टिरासीत् ।
हिमांशुविम्बच्युतिभिस्तदानीं तुषारवर्षैरिव हेमवल्ली ॥१६॥
इतीव सर्वर्तुषु सर्वकामान् भूयोऽनुभूय प्रमदासखः सन् ।
अथाभवद्दिग्विजयच्छलेन देशानिव क्षोणिपतिर्दिदृक्षुः ॥१७॥
सर्वानलङ्कारय कुञ्जरेन्द्राञ्जवेन निर्वाहय वाहनानि ।
तन्माम(?) सन्नाहय वीरवर्गानित्यादिदेश क्षितिपोऽन्तिकस्थान् ॥१८॥
दिशां जयाय क्षितिपो यियासुर्भवन्तु सन्नाहभृतो भवन्तः ।
ऊचुश्चतुर्दिक्षु जनाः प्रयुक्ता योधानशेषानिति सांयुगीनान् ॥१९॥
रचितमुखरुचोऽमी चारुचामीकरेण स्फुटखुरखुरलीभिश्चञ्चलां स्पर्शयन्तः ।
वमुर्रधकचलन्तो वालधीन् वारिराशेरिव तरलतरङ्गा जातरङ्गास्तुरङ्गाः ॥२०॥
रचितरुचिरनृत्यैश्चन्द्ररोचिष्णुरोचि[:]प्रचयरुचिरदेहैः कज्जलोज्ज्वालशोभैः ।
गुरुभिरिव सगाङ्गैर्यामुनैरेव भङ्गैर्मु वनमिदमपूरि स्वान्तवेगैस्तुरङ्गैः ॥२१॥

लीलारश्म्यावकर्षाद् भ्रमिरचनचलत्तुङ्गरंहस्तुरङ्ग-
श्रेणी सद्यः पटङ्काहतिनमितसमुन्नामितानेकवारम् ।
श्वासान् दीर्घानिवोच्चैर्दिशि दिशि बहलोद्धतधूलीच्छलेन
क्षोणीक्षोभात् क्षिपन्ती जयति नरपतेः प्रस्थितौ दिग्जयाय ॥२२॥
किं कज्जलक्षितिधरैः पृथुलैश्चलद्भिः किं वान्धकारनिकरैरिव कूटबद्धैः ।
इत्थं विकल्पशतजल्पनकल्पनाद्यैः स्तम्बेरमैर्व्यरचि चित्रपदा धरित्री ॥२३॥
स्वीयोद्यद्दानगन्धप्रकुपितहृदयात्तारितोद्दण्डशुण्डै-
रुद्गच्छत्पुच्छगुच्छं प्रतिकरटिधिया सिन्धुरैर्धावमानैः ।
तत्पादन्यासनम्रीभवदचलवरोद्भ्रान्तिभावावघूर्णत्-
पारावाराम्बुपूर्णा धरणिरतितरां शङ्कमाना चकम्पे ॥२४॥
इत्थं सम्यग्र(?)शक्त्या प्रचलति नृपतौ कुम्भिगम्भीरशब्दै-
र्वीराणां वीरनादैस्तुरगचयमहाहर्षहेषाभरैश्च ।
उन्मुच्योच्चैः प्रतीचीं किमुत पतिरपां लोपयल्लोँकमेतं
प्राचीं प्रत्यञ्चितोऽयं चकितमिति चमत्कारिचेता जनोऽभूत् ॥२५॥
किञ्चाकर्ण्यागमनमवनीवासवस्यास्य धामो-
द्दामस्तम्बेरमरम[ण]नमतृस्तम्भकायान् निकायान् ।
सज्जीभूतैस्तुरगनिवहैः पूरितां मन्दुरां च
त्यक्त्वा त्रासाकुलितमनसा कोऽपि भेजे दिगन्तम् ॥२६॥
नानारत्नद्युतिचयसमुत्सारितध्वान्तकान्तां
क्रीडासक्तप्रणयिवनिताव्याप्तकेलिस्थलीञ्च ।
राज्ञस्तस्य प्रचलितचमूद्भूतकोलाहलेन
व्यग्रा हित्वा पुरमतिभियाऽरण्यमन्यो विवेश ॥२७॥
अमन्दं रम्भोरूविपुलपुलकालीस्तनतटी-
परीरम्भारम्भं स्मरविशिखदम्भं विरचयन् ।
अकस्मात्तत्सेनाकलकलमुपाकर्ण्य विसृजन्
भिया त्रस्तां कान्तां रिपुरहह कान्तारमभजत् ॥२८॥
इति प्रतापानसहिष्णवोऽन्ये विपक्षभूमीपतयो विनेशुः ।
सम्भाव्य सैन्यानि विजम्भमाणयुद्धाय केचित् स्पृहयाम्बभूवुः ॥२९॥
अत्युद्गतध्वान्तनितान्तभीमे गजेन्द्रसन्दोहसमाकुले च ।
सेने उभे रेजतुरुत्तरङ्गे वेले इवोद्यत्प्रलयार्णवस्य ॥३०॥

अखर्वगर्वैर्वचनैः पुरस्तादप्यस्त्रतोऽन्तर्बहु साधयद्भिः ।
आयोधनं धन्यधुरन्धराणामत्रासमत्रास मुहूर्तमात्रम् ॥३१॥
धनुर्धरैः कैश्चिदतिप्रचण्डैः शरैर्हताधोरणशून्यपृष्ठः ।
स्वपूर्वतः प्रेरितविक्रमोऽयं हस्ती पुनस्तानवधीत् समस्तान् ॥३२॥
नियुज्यमानाशुगपुङ्खपाणेर्वाणेन चान्यार्थनियोजितेन ।
तुरङ्गरंहःप्रकरप्रकर्षादेकस्य मूर्धा चकितं निजघ्ने ॥३३॥
प्रधावतः प्रत्यरिवीरमुच्चैरन्यस्य रोषातिशयेन सद्य [:] ।
समुद्गतः पाणिरुदीरितास्त्रः कस्यापि बाणैश्चकृतेऽध्वमध्ये ॥३४॥
उद्यच्छमानस्य करेण तूणाद् बाणं रुषाऽभ्यापततो विदूरात् ।
परस्य धावत्तुरगस्य कश्चित् खुरञ्छरौघैश्चतुरश्चकर्त ॥३५॥
आगच्छतः सम्मुखमुन्मुखस्य दन्तावलस्योज्ज्वलदन्तकान्तेः ।
अखण्डयत् कश्चन चण्डतेजा उद्दण्डशुण्डामसिना हयस्थः ॥३६॥
शिलीमुखैरध्वनि कृत्तकण्ठनिषादिना वेगवता हयेन ।
कश्चित् खुराग्रैस्तुरगाधिरूढः सहस्रधा क्षुण्णशरीर आसीत् ॥३७॥
समानरंहस्तुरगाधिरूढौ कौचिद् भटौ संयति सांयुगीनौ ।
परस्परं तावदिषुप्रयोगाद् विपाटितैकैकभुजावभूताम् ॥३८॥
सन्नाहसम्पूर्णशरीरयष्टी कौचित् सुसन्धानविदां वरेण्यौ ।
सुतीक्ष्णबाणप्रकरप्रयोगात् परस्परं भिन्नदशावभूताम् ॥३९॥
बभौ सकम्पा हतकुम्भिकुम्भस्तनी विपर्यस्तविभूषणाङ्गी ।
मणिच्छटाव्यक्तदशैव वीरान् निरीक्षमाणा रणभूः पिशाची ॥४०॥
उद्यद्रजोराजिविधूसराङ्गी विलोलकेशा रुधिरार्द्रवासाः ।
रजस्वलेव प्रमदा कथञ्चिन्न दर्शनार्हा रणभूमिरासीत् ॥४१॥
पदातिवाजिद्विरदव्रजानां सद्यो निकृत्तोरुशिरोभुजानाम् ।
पङ्कोच्चयः शोणितसञ्चयोत्थः सीमेव मध्ये बलयोर्बभूव ॥४२॥
उदायुधैर्वाजिन एव वीरैर्धावन्त उच्चैरुपनीयमानाः ।
पङ्केष्वमज्जन्निह सावशेषं सायं पयोधौ द्युमणेर्यथाश्वाः ॥४३॥
तद्रक्तपङ्के हतसद्भटानां मुखान्यलक्ष्यन्त बहुक्षतानि ।
सायं नभस्युत्कटराहुदंष्ट्राविदार्यमाणा इव चन्द्रबिम्बाः ॥४४॥
मुखानि भल्लाहतशात्रवाणां सुचारुनेत्राणि च रक्तपङ्के ।
आसन्निवासक्तमधुव्रतानि प्रफुल्लरक्तोत्पलवृन्दकानि ॥४५॥

कुम्भस्थलान्याशु बभुर्गजानामर्धेन्दुबाणाहतिमादधन्ति ।
प्रियप्रदत्तस्वनखक्षतानि स्त्रीणामिवोच्चस्तनमण्डलानि ॥४६॥
कुम्भे निमग्नाः करिणां सरक्ते पुङ्खावशेषा विशिखा विरेजुः ।
पयोधरे कुङ्कुमपङ्कलिप्ते भृङ्गा निषण्णा इव कामिनीनाम् ॥४७॥
शतं युवानः समकालमेकैकस्या बभूवुः सुरवारनार्याः ।
एकस्य तु प्रावृषि वारिराशेरिवोत्तरङ्गाः शतशस्तटिन्यः ॥४८॥
कबन्धमित्याकुलिता भ्रमन्तस्तृषा महत्या रणसीम्नि वीराः ।
तदैव तेऽन्यायुधकृत्तकण्ठाः स्वयं कबन्धावलयो बभूवुः ॥४६॥
कश्चिद्भटः संमृगयंस्तृषार्तः संग्राममभूमावपि जीवनानि ।
निर्भिन्नलक्षैर्वरवीरबाणैः स जीवनानि स्वयमुत्ससर्ज ॥५०॥
अथ क्षितीन्द्रः प्रमदासुचारुभ्रूवल्लिसंस्पर्धि धनुर्दधानः ।
बभौ रुषा शोणितनेत्रकोणः सपुष्पधन्वेव स पुष्पधन्वा ॥५१॥
किं कार्त्तिकेयः किमयं कृतान्तः पिनाकपाणिः किमसौ किमिन्द्रः ।
श्रीशत्रुशल्यं प्रतिभूमिपाला आसन्नतीव प्रतिवर्णयन्तः ॥५२॥
शरैः सुतीक्ष्णैरसिना शितेन श्रीवीरभद्रक्षितिपात्मजेन ।
शिखासहस्रैः शिखिनेव तूलकदम्बकं ध्वस्तमरातिवृन्दम् ॥५३॥
हताः समस्ता रणसीम्नि तेन श्रीशत्रुशल्येन विपक्षभूपाः ।
इतीव सद्यो विनिशम्य दूरादुपेत्य पत्न्यो रुरुदुस्तदीयाः ॥५४॥
स्खलदश्रुनिरुद्धलोचना निपतन्त्योऽध्वनि सन्नतोन्नते ।
अथ वैरिनरेन्द्रयोषितो रणभूमिं व्यथिताः प्रतस्थिरे ॥५५॥
गलदुज्ज्वलमौक्तिकस्रजश्चलदाच्छादनकम्पितस्तनाः ।
बहिरीयुररातिसुभ्रुवो गमनावेशविलोलकुन्तलाः ॥५६॥
पतदश्रु विमृज्य पाणिभिः कलयन्त्यो दयितं निजं निजम् ।
रमण प्रिय वल्लभेति ताः शयने सुप्तमिव व्यबोधयन् ॥५७॥
अवलोक्य तथाविधान् पतीन् किमिदं वृत्तमिति स्थिताः क्षणम् ।
अथ कातरलोलचेतसः सुदृशस्ता व्यलपन् गुरुस्वरैः ॥५८॥
शयने रमणीजनैर्वपुः परिषिक्तं घनचन्दनैर्बभौ ।
तदिदं तव धूलिधूसरं रुधिरौघे प्रिय वीर लीयते ॥५६॥
अयि नाथ करोयमङ्गनास्तनकुम्भे नवपल्लवायितः ।
तमिमं परुषैः शिवाऽशिवा दशनैः कृन्तति हन्त हा विधे ॥६०॥

किमिदं प्रिय ते यदाननं प्रमदास्याम्बुजषट्पदायितम् ।
शितसायकशातमुच्चकै रुधिरालोलकचैस्तदाचितम् ॥६१॥
प्रमदाप्रणयाहितं नखं न विषेहे स्तनकुङ्कुमारुणम् ।
तदुरः शितशूलकीलितं तव नाथ व्यथते कथं न वा ॥६२॥
रमणीनयनाभिघर्षणं विदधे यन्नयनं विदूरतः ।
भवदन्तिकमागतां न मां वरवीर व्यथितां तदीक्षते ॥६३॥
अपि सौधमये न मन्दिरे निहितौ हन्त कदापि यौ पदौ ।
घनशोणितपङ्कसङ्कुले लुठतेऽसो तव नाथ भूतले ॥६४॥
रमणीरमणीयपाणिभिर्घनसंवाहनसेवितौ पदौ ।
अरुणाम्बुजकान्तिकोमलौ प्रिय गृध्रैरपि तौ नियन्त्रितौ ॥६५॥
अयि वीर पुरी तवाधुना पिहितद्वारविलोचनद्वयी ।
गुरुशोकविमुद्रितस्वना दयिता साऽनुमृतेव लक्ष्यते ॥६६॥
अयि नाथ स मां त्वया विना गुरुशोकग्लपिताननश्रियम् ।
रुदतीं करुणार्द्रनिस्वनैः प्रियवाचा प्रिय किं न भाषसे ॥६७॥
नवसङ्गमलज्जिताननामपरां वीरवरेण्य वल्लभाम् ।
हृदयं स्तनसङ्कुलं घ्नतीं विलुठन्तीं भुवि किं न वीक्षसे ॥६८॥
रमण प्रिय कीर एष ते विरताहारमलीमसः शुचा ।
सुदृशा रुदितैरनूदितैर्विलपन् कान्त न किं समीक्ष्यते ॥६९॥
करिणो मदनिर्झरोद्धुराः क्व गतास्ते च मनोरमा हयाः ।
प्रिय किं स्वपिषि त्वमुत्थितो ह्यनुशाधि त्वरयाऽनुजीविनः ॥७०॥
प्रिय पश्यसि किं न तेऽन्तिके खरनाराचनिपातजर्जराः ।
रणसीमनि शेरते परं शतधोद्यद्रुधिरच्छटा भटाः ॥७१॥
मणिरेष ललाटमण्डनस्त्रुटितो धूलिषु लीयतेऽधुना ।
विशतीव शुचा समाकुलो मलिनः सन् सहसा रसातलम् ॥७२॥
तव गच्छत ईदृशीं दशां न जहौ खड्गलता करग्रहम् ।
रमणेषु हि योषितामनिर्वचनीया हृदयङ्गमाः क्रमाः ॥७३॥
नृपतेरपि मानसं तदा करुणाम्भोधिनिमग्नमास तत् ।
रुदितैः सविलापभाषणैरपि वैरिक्षितिपालयोषिताम् ॥७४॥

अथ मधुरवचोभिः सान्त्वयित्वाऽरिनारी-
श्चिरमिति विलपन्तीः शोभमानो विशेषात्।
दधदुरसि स चापं बाणपाणिः पुरीं स्वां
मुदितहृदय-सेनास्तूयमानः प्रतस्थे ॥७५॥

दोर्दण्डप्रबलप्रतापतपनव्यापन्नसर्वाहितः
श्रीमज्जामकुलप्रदीप उदितः श्रीशत्रुशल्यो नृपः।
वाणीनाथकृतेऽस्य जामविजये तत्तद्गुणालङ्कृते
काव्ये पूर्वजनानुवर्णनविधौ सर्गोऽथ षष्ठोऽगमत्।।७६॥

---

## [ सप्तमः सर्गः ]

ततः स्ववीर्येण विजित्य जेता युद्धे विरुद्धान् वसुधाधिपालान्।
पुरं प्रगच्छन् पुरुहूततेजाः परं प्रजानन्दततिं ततान ॥१॥
छत्राच्छल (?) च्छायगतार्कतापो बभौ चलच्चामरवीज्यमानः।
सानन्दमामन्दितवाजिवेगः सम्भावयन्नेष जनाञ्जनेशः।२॥
मूर्धानमानम्य चलत्किरीटप्रभापराभूतविभाकरांशुः।
कृतप्रणामः प्रथमं द्विजेभ्य आसीन आशीर्वच आददे सः ॥३॥
समापपृच्छे श्रुतिपाठपूतश्रीकण्ठभासा रुचिरान् द्विजेन्द्रान्।
श्रीशत्रुशल्यो नृपतिर्यथेन्द्रो वाचस्पतिप्रस्फुरितान् महर्षीन् ॥४॥
विचित्ररत्नाभरणोज्ज्वलाङ्गी चलत्पताकावलिबाहुवल्ली।
उत्कण्ठितात्मा वरवर्णिनीव चिराय राज्ञा नगरी निरैक्षि ॥५॥
ततो वभौ चारुसुवर्णकुम्भा भ्रम [द्] द्विरेफावलितोरणस्रक्।
पुरी चिरादर्शनदीर्घदृष्टिर्नितम्बिनी पीनपयोधरेव ॥६॥
चलद्दुकूलस्तनमण्डलाभिः संवीक्ष्यमाणः पथि नागरीभिः।
ससम्भ्रमालोकनतत्पराभिर्गवाक्षजालाहितलोचनाभिः ॥७॥
गच्छन् हयेनायतरश्मिकर्षात् संस्तब्धवेगेन रराज राजा।
पार्श्वद्वये सन्नमितोभयांसैः स नागरौघैरभिनन्द्यमानः ॥८॥

दृगञ्चले चन्दनचारुचित्रं ललाटपट्टेऽञ्जनमावहन्ती ।
तद्दर्शनोत्कण्ठितचित्तवृत्तिः समाययौ काचन राजमार्गम् ॥६॥
सुचारुचामीकरनूपुराभ्यां सम्भाव्य केयूरपदं स्वबाह्वोः ।
श्रीवीरभद्रात्मजदर्शनोत्का काचित् पुरद्वारि चिराय तस्थौ ॥१०॥
पयोधरे न्यस्तसुवर्णकाञ्चि [ः] करेण सा कञ्चुलिकां वहन्ती ।
रूपं तदीयं हृदि भावयन्ती वातायनं काचिदुपारुरोह ॥११॥
तस्थे समीरोच्चलदंशुकान्तमाच्छाद्य हस्तेन कयाप्युरोजम् ।
सुवर्णकुम्भं नवपल्लवेन सम्भावयन्त्येव नृपप्रवेशे ॥१२॥
कयापि यान्त्या नृपवर्त्म वेणीं मुक्ताकलापेन च वेष्टयन्त्या ।
मुहुर्मुहुश्चञ्चलदृष्टिपातैः संमोहयन्त्या नगरी व्यरोचि ॥१३॥
वीरानथाकृष्य विसृज्य दूराच् श्रीवीरभद्रक्षितिपाङ्गजन्मा ।
स वीरवेषं दधदेव वीरः शुद्धान्तमुद्यन्मुदमाविवेश ॥१४॥
वातोल्लसत्पङ्कजपत्रलोलैर्नेत्रैर्गुरुस्वेदपयोधराभिः ।
निरीक्ष्यमाणः पुरसुन्दरीभिः सिंहासनं तत्र नृपोऽध्यवात्सीत् ॥१५॥
स तासु कान्तासु मनोहरासु प्रत्येकमेकोऽपि मनः प्रविष्टः ।
विभाति भास्वत्सरसीष्विवासीत्(?) तोयं गतो भास्करचारुबिम्बः ॥१६॥
स सर्वभूमीपतिसेव्यमानः सर्वार्थकामान् परिपूरयन् सः ।
सर्वोपरिष्टात् स हि शोभमानः स सर्वकल्पः समयं निनाय ॥१७॥
अनेन पत्या वसुधा सुधांशुमुखेन वाञ्छापरिपूरणेन ।
उच्चैर्बभावेकरसेन रम्या वधूरिवाविष्कृतविभ्रमेण ॥१८॥
इत्थं महीं पालयतश्चिराय नृपस्य दुष्प्रापमहर्द्धिभाजः ।
प्रीतिं चिकीर्षुः परिमोदमानः स पारसीकः क्षितिपः समागात् ॥१९॥
अत्युग्रवेगैः परितश्चलद्भिस्तुरङ्गसंघैः परिपूरिता भूः ।
प्रचण्डधाम्नः किरणैरिवास्य श्रीपारसीकस्य विभोः प्रयाणे ॥२०॥
प्रीतिं चिकीर्षन्तमथाव्रजन्तं श्रीपारसीकं क्षितिपो निशम्य ।
श्रीवीरभद्रक्षितिपाङ्गजन्मा संमानसंभावनतत्परोऽभूत् ॥२१॥
लीलासमुल्लासितचित्तवृत्तिः क्षणेन संभावितवाहिनीकः ।
सोऽसंख्यभूमीपतिभिः समेतः प्रातिष्ठत श्रीयुतशत्रुशल्यः ॥२२॥
अत्युग्रतेजाः प्रबलप्रतापैरनुद्रुतो भूपतिभिः स राजा ।
मृतैः(?) शतैः शोभयति स्म मध्वीं गच्छन् प्रचण्डांशुरिवांशुसंघैः ॥२३॥

कुतूहलेन व्रजतोऽस्य राज्ञो विचित्रवर्णैस्तुरगप्रधानैः ।
सहेषितैर्भूतलमास पूर्णं नभः सगर्जैरिव वारिवाहैः ॥२४॥
तथा व्रजन्तं विनिशम्य दूराच्छ्रीजामवंशाम्बुधिशीतरश्मिम् ।
स पारसीकः क्षितिपोऽन्तरात्मन्युदीर्णचिन्तः सहसा बभूव ॥२५॥
तं वीक्ष्य भीमप्रतिमं स भीमं भटः समेतं समयं निनिन्द ।
भीमान्धकारं घनमीक्षमाणा बहिर्व्रजन्ती ह्यभिसारिकेव ॥२६॥
श्रीजाममालोक्य स पारसीकः प्रीतिं च भीतिं च जगाम सद्यः ।
इष्टाप्तयेऽन्धे तमसि व्रजन्ती सङ्केतमार्गं ह्यभिसारिकेव ॥२७॥
अथोग्रतेजाः किल जामराजः स पारसीकोऽपि च सामवृत्तिः ।
विराजतां द्वौ परिणद्धसैन्यौ दिवाकरेन्दू इव शोभमानौ ॥२८॥
परस्परालोकनलब्धहर्षौ द्वौ भूपती स्मेरमुखारविन्दौ ।
मुहुः समाष्वज्य यथार्हमेतौ समूषतुस्तत्र शुभासनेऽथ ॥२९॥
विधाय वार्तां कुशलानुपूर्वां श्रोत्रैकसौख्यप्रदया च वाचा ।
संभाव्य भूयोनुमतौ निवेशं स्वं स्वं ततस्तौ मुदितौ प्रयातौ ॥३०॥
पश्यन् नरेन्द्राननुगान् समस्तान् सहस्रसंख्यानथ जामकेतोः ।
स पारसीकः किल चन्द्रसेनं विनैव सर्वत्र सुखं जगाम ॥३१॥
अत्युग्रसेनः खलु चन्द्रसेनः प्रशास्ति शास्ता रिपुभूपतीनाम् ।
अनन्यसाधारणसम्पदेषः सौराष्ट्रतद्गुर्जरमध्यभूमिम् ॥३२॥
श्राम्यन्ति नैव द्युमणेर्यथाश्वा गिरो न कुण्ठाः सुकवेर्यथा वा ।
न चन्द्रसेनक्षितिपस्य सेनाः पराभवं यान्ति परेभ्य एव ॥३३॥
स पारसीकक्षितिपस्य पूर्वं चिरं विरोधप्रकरं चचार ।
अथैनमालोक्य स पूर्वरोपात् तं धर्तुमेवोद्यममाततान ॥३४॥
प्रीत्या तमाहूय निगूढचेताश्छलात् समुद्गोपितबाह्यकोपः ।
जग्राह स ग्राह इवाल्पसत्वं सेनो द्विजेन्द्रा इव(?) चन्द्रसेनम् ॥३५॥
स्वं स्वामिनं वीक्ष्य तथा निबद्धं चिराय हाहाकृतमादधानाः ।
भटास्तदीया नृपशत्रुशल्यं निवेदयामासुरपेतशौर्याः ॥३६॥
तथा निबद्धं किल चन्द्रसेनं निशम्य जामोऽपि चचाल रोषात् ।
हन्यामिहान्यायजुषं बलेन कल्पान्तकोद्वेल इवाम्बुराशिः ॥३७॥
क्षणेन शक्तोऽस्मि च पारसीकं हन्तुं ससैन्यं किमिहास्ति चित्रम् ।
स चन्द्रसेनो निहतो यदि स्यादित्याह भूयो वचनं स जामः ॥३८॥

ततः स जाम-क्षितिपालमौलिर्न्यवेदयत्तं लघु पारसीकम ।
सम्मेलितोऽयं भवता समं मे तेनास्त्यमुं मोचयितुं प्रयासः ॥३६॥
सामप्रयुक्तैर्वचनैः स दुष्टो मुहुर्मुहुस्तेन निवेदितोऽपि ।
नामोचयत्तं कुपितोथ जामो यमो दिधक्षन्निव विश्वखण्डम् ॥४०॥
जानीहि रे भूपतिपारसीक मां क्षत्रधर्मप्रथमं हि जामम् ।
न चन्द्रसेनोद्धरणं विनाद्य नूनं करिष्यामि हि तोयपानम् ॥४१॥
इति-प्रतिज्ञं परिवीक्ष्य जामं जगज्जिघत्सन्तमिवान्तवह्निम् ।
निबद्धसन्नाहमुदीरितास्त्रं सेनासमूहं च स जातभीतिः ॥४२॥
हेलाजिताशेषनरेश्वरोऽपि जामे सकोपे स भयार्त आसीत् ।
समागमे धामविशेषभाजां न साध्वसं रोद्धुमलं महान् हि ॥४३॥
लीलाविनिर्धूतसमस्ततेजा जामे नृपे सोऽप्यरिरस्ततेजाः ।
प्रभाविशेषैर्निहतान्धकारो निशाकरोऽर्के हि गतप्रभावः ॥४४॥
श्रीशत्रुशल्ये सति रोषभाजि क्षुब्धः स जातो नहि तत्र चित्रम् ।
नीरन्ध्रमावर्षति वारिवाहे यान्त्येव शान्तिं ज्वलनाज्ज्वलन्तः ॥४५॥
युद्धाय सद्यो विहितोद्यमाय श्रीशत्रुशल्यक्षितिपाय सोऽथ ।
अदत्त राजा स्वमिवात्तभीतिस्तं चन्द्रसेनं गतकीर्तिचन्द्रः ॥४६॥
स्वपौरुषेणेन्द्रसमानपौरुषो विमोचयन् मोचितचित्तशोचनम् ।
स चन्द्रसेनं नवकीर्तिचन्द्रमःप्रमोदिताशेषदिगन्तरो बभौ ॥४७॥
स पारसीकक्षितिपोऽपि जामं सम्मानयन् मानधनं निवेद्य ।
दन्तावलानुज्ज्वलदन्तकान्तीन् कीर्त्या समेतानिव सम्प्रतस्थे ॥४८॥
तैः साधु साध्वित्यनुगैर्नरेन्द्रैः संस्तूयमानो महनीयकीर्तिः ।
क्षात्रं कुलं चोज्ज्वलयन् कुलीनः कौतूहलेनागतवान् पुरीं स्वाम् ॥४६॥
आश्वास्य भूयो मधुरैर्वचोभिः संभाव्य संभावनया महत्या ।
श्रीचन्द्रसेनं परिपूर्णचन्द्रस्फुरन्मुखश्रीर्विससर्ज राजा ॥५०॥
सम्राट् सभायां स महीक्षितोऽन्यान् संमानयन् मानधनाग्रगण्यः ।
वाचा सुधाप्लावितया समन्तादन्तःपुरं कान्तवपुर्विवेश ॥५१॥
ततो नरेन्द्रो नयनाभिरामो रामाभिरामो विजहारकामः(?) ।
व्यलोकयल्लोचनलोभनीयां विलासवाटीं ललितां विलासी ॥५२॥
उत्फुल्ल-केसर-परागपरागतश्रीधुन्वन् विलाससरसीसरसीरुहाणि ।
मुक्तास्व(?)नद्यु पवनः पवनः सिषेवे तं शोभमानतिलकं तिलकं नृपाणाम् ॥५३॥

लताः समीचीनसमीरकम्पिता निषक्तभृङ्गावलिपुष्पलोचनाः ।
विलासवाट्यां चलदङ्गलीदला भान्तिस्म रामा इव लोलविभ्रमाः ॥५४॥
लताप्रसूनस्तवकोपरि स्थिता बभुर्विभिन्नाञ्जनकान्तयोऽलयः ।
वियुक्तकान्तास्तनमग्नमार्गण-प्रदीप्तपुंखा इव पुष्पधन्वनः ॥५५॥
प्रफुल्लमल्लीकुसुमानि तत्र चकाशिरे व्याप्तमधुव्रतानि ।
नितान्तकान्तायतचुम्बनेन स्त्रीलोचनानीव निरंजनानि ॥५६॥
वल्लीसकाशादभिनिष्पतन्ती बभौ रसालेष्वथ भृङ्गमाला ।
स्निग्धेषु कान्तेष्वनुरागिणीनां प्रृषत्कटाक्षोच्चपरम्परेव ॥५७॥
सोपानभास्वद्वलिमध्यदेशा विलोलशैवालसुमृष्टकेशा ।
प्रफुल्लपङ्केरुहचारुनेत्रा बभौ नितान्तं सरसी-सुनेत्रा ॥५८॥
रसातिरेकेण सुखावगाहा मृणाललोलायतबाहुवल्ली ।
विलोकयन्ती चलताऽम्बुजेन नेत्रेण बाला-सरसी विरेजे ॥५६॥
पौराङ्गनाप्रणयकोपनिवासहेतुश्छायातरुप्रचययन्त्रित-चारुतीरा ।
मंजीरमंजुरुतरंजितलोलहंसी रेजे विलाससरसी सरसीरुहेण ॥६०॥
कूले विहारसरसोऽस्य रसालमाला व्यालोलमौलिमुकुलाकुलकोकिलालिः ।
चंचत्परागभरपिंजर-चंचरीक-संचार-चंचलदला लतिकाश्च रेजुः ॥६१॥
अथातिरोषात् कुलकामिनीमुखच्छविं करैः कुङ्कुमपङ्कपिञ्जरैः ।
स रोहिणीनाथ उदेति चित्रयन् विनश्वरीं पूर्वदिशो मुखश्रियम् ॥६२॥
रथाङ्गकान्ताकरुणोल्वणस्वरं स्मरन्निशायाश्च मुखं मलीमसम् ।
इतीव चिन्ताचयचेतनश्चिरात् स मन्दमन्दं समुदेति चन्द्रमाः ॥६३॥
दिक्कामिनी-कुमुदिनी-रजनीभिरुद्यन्निन्दुर्विनोदयति तुल्यकराभियोगः ।
प्रायो भवन्ति रमणीषु हि दक्षिणानां पुंसां समानविषया रससन्निवेशाः ॥६४॥
स्फारीकृतोज्ज्वलकरप्रकरं विरेजे पूर्णेन्दुमण्डलमुदञ्चिततारतारम् ।
उत्क्षिप्तमौक्तिकचयं रतिनायकस्य क्रीडाङ्गणोपरि यथा विततं वितानम् ॥६५॥
तथाविधां वीक्ष्य निशां निशाकरस्फुरन्मरीचि-प्रभयाभिरंजिताम् ।
अनेकदेशागतनर्तकीकुलां स नृत्यशालामविशन्महीपतिः ॥६६॥
रत्नप्रभाविस्फुरदन्तरालामामुक्तमुक्ताफलचारुमालाम् ।
आस्तीर्ण-विस्तीर्ण-वितानजालां विवेश भूपो निशि नृत्यशालाम् ॥६७॥
परिस्फुरत्कांचनसञ्चयाचितं महार्घनानामणिराजिराजितम् ।
प्रकीर्णवर्णांशुकमंजुमंजुलं निषेदिवानेष नृपो नृपासनम् ॥६८॥

संवीज्यमानः करचालनोल्लसत्पयोधरप्रान्तविलोलहारया ।
नीचैः क्वणत्-कङ्कण-किङ्किणीकया कयाऽप्ययं चामरचारुमारुतैः ॥६९॥
नम्रीकृतांऽसोच्चलदञ्चलस्फुरद्दोर्मूलकूलं कृशपीवरस्तनम् ।
निवृत्तवेणीपदया निषेवितः कयापि ताम्बूलनिवेदनैरयम् ॥७०॥
समर्पयन्ती कुसुमानि काचिन्नृपस्य हस्ते विनयावनम्रा ।
जगज्जिगीषोः कुसुमायुधस्य शितायुधानीव रतिश्चकाशे ॥७१॥
नृपस्य काचिद्दधती कटाक्षप्रख्याञ्छरान् भ्रूरुचिरं च चापम् ।
प्रत्यर्पितं विश्वजयश्रमेण रतिः स्मरेणेव धनुः शरांश्च ॥७२॥
ताभिः प्रलम्बावरणाम्बराभिर्व्यक्तेङ्गिताभिः स्मितविभ्रमेण ।
बभौ नृपो गीतयशःप्रकाशः स्वर्नागरीभिर्मघवानिवायम् ॥७३॥
बभौ नरेन्द्रो नयनारविन्दैः स सुन्दरीणामभिवीक्ष्यमाणः ।
चलद्भिरुच्चैरिव वल्लरीणामिन्दिन्दिरैः क्रन्दलितो रसालः ॥७४॥
तिर्यक्त्रिकं वलितमध्यमुदञ्चदंसं लास्यप्रकाश्य-मृदुहास्यलवाल्पभाग्भिः ।
पुष्पांजलिः प्रचलदक्षि कराम्बुजाभ्यां निर्वर्तितो नरपतेरथ नर्तकीभिः ॥७५॥
कृत्वा समं चरणपल्लवमुन्मृणालं फुल्लारविन्दमिव संस्फुरदङ्गुलिः सा ।
सव्यं प्रसार्य करमन्यमथावकुञ्च्य तस्थौ कटाक्षनटितैरभिमोहयन्ती ॥७६॥
लोलालकावलि शिरो विधुतं वहन्ती केयूर-कुण्डलमणिप्रभया ज्वलन्ती ।
आतन्वती नयनविस्मयमाविरासीद् विद्युल्लतेव किल काचन रङ्गभूमौ ॥७७॥
सङ्गीतमङ्गितवती हृदयङ्गमाङ्गी दृग्भङ्गिभङ्गुरपदं मृदु संगिरन्ती ।
मञ्जीर-मञ्जु-परिसञ्जितरञ्जिताङ्घ्रिः काप्यत्र सभ्यजनसम्भ्रममाबभार ॥७८॥
प्रकाशयन्ती वलितोरुविभ्रमं दधत्युरोमण्डलचञ्चलाञ्चलम् ।
नियोजयन्ती त्रिपताकपूर्वकान् करप्रकारानथ काप्यशोभत ॥७९॥
चिराय चित्ते परिचिन्त्य धात्रा या चित्रिता चित्तभुवः सहायः ।
चित्रं ततानाधिसभं समुच्चत्पाटीर-वक्षोजतटी नटीयम् ॥८०॥
स्वरेण माध्वीकरसस्रवेण जगन्त्यपि त्रीणि विमोहयन्ती ।
ब्रह्मादितालं समुदीरयन्ती रङ्गस्थलं काचिदलञ्चकार ॥८१॥
स्वच्छन्दरेखावधिसावधाना रङ्गस्थले मण्डलमादधाना ।
एका हरन्ती हृदयं जनानामाभाति रूपेण रतेरनूना ॥८२॥
सविभ्रमोद्भासिदृगन्तसृष्टयः पयोधरानम्रशरीरयष्टयः ।
सुधालवस्यन्दिमृदूक्तिवृष्टयश्चकाशिरे तत्र कुरङ्गदृष्टयः ॥८३॥

आतन्वतीनां नमदङ्गयष्टि दृगन्तसाकूत-विलोकितानि ।
दूरेऽस्तु तासां सविलाससलास्यं हास्यं जगन्मोहनमाततान ॥८४॥
ह्रीणाति वीणा किल कोकिलाली न काकलीध्वानमुरीकरोति ।
सत्-किन्नरी संप्रति खिन्न-रीतिर्नटीगणे गायति तत्र किञ्चित् ॥८५॥
विलोकयल्लोचनलोभनानि लास्यानि लोलायतलोचनानाम् ।
लेभे मुदं चेतसि लोकनाथः स्वर्नागरीणामिव नाकनाथः ॥८६॥
विभूषणैर्भूपतिभूषणेन संभाव्य रम्भासदृशीर्नतभ्रूः ।
तास्तास्ततस्तामरसेक्षणेन भेजे पुरं भूमिपुरन्दरेण ॥८७॥
श्यामावगूहनमिलद्घनसारपङ्कलिप्तोऽथ चुम्बन-विलग्न-घनाञ्जनश्रीः ।
उच्चैर्विनोद्य बहु पाण्डरमण्डलोऽयं चन्द्रोऽस्तमेति परिदीप्तकलङ्कलेखः ॥८८॥
कर्तुं नवं जगदिदं प्रसरन्मयूखो देवस्त्विषामधिपतिः समुदेति सद्यः ।
अम्भोजिनीवदनमुद्रणपण्डिताग्र्यध्वान्तावलोकनरुषेव स लोहिताङ्गः ॥८९॥
उद्यद्रथाङ्गकरुणस्वनमुग्धचेताः संदीप्यते स भगवान् द्रुतमंशुमाली ।
यस्योदयादपि नशत्(?) तिमिरान्तरायं शोभाभरेण जगदाशु चमत्चकार ॥९०॥
उल्लासयन् दयितसङ्गमकातराणां गाढं नवोढसुदृशां हृदयान्तराणि ।
सार्धं मनोरथशतेन वियोगिनीनामुद्योतते कमलकाननकेलिबन्धुः ॥९१॥
केलीकलापगुरुजागरणाभिघूर्णत्प्रौढाङ्गनाकुटिलदृष्टिविहन्यमानः ।
प्राची-वधू-विरचितो जगदीक्षणाय संदीप्यते गगनमण्डपचण्डदीपः ॥९२॥
अम्भोजिनीवदनविभ्रमसानुरागश्चक्राङ्गनाविरहखण्डनपण्डितोऽयम् ।
उन्मीलदंशुरुदयाचलमौलिरत्नं विद्योतते गगनमण्डलमण्डनश्रीः ॥९३॥
क्षोणीपतेरुषसि दुन्दुभिधीरनादैरुन्मीलितं नयनमत्यलसातिघूर्णत् ।
प्रत्यग्रसूरकिरणप्रतिबोध्यमानसत्पुण्डरीकमुकुलश्रियमादधाति ॥९४॥
श्रीशत्रुशल्यनृपतेर्वदनारविन्दं प्रातः समुत्थितवतः शयनाद्विभाति ।
यत्सौरभाद् द्रुतमधुव्रतशिञ्जितानि वन्दीजनैर्म······ङ्गलभाषितानि ॥९५॥
अस्य प्रभातसमयोचितदर्शनेऽस्मिन्नादर्शने वदनबिम्बमथो विभाति ।
स्वच्छेऽम्भसि स्फुटमपेतकलङ्कलेखो रोचिष्णुरोचिरिव शारदपूर्णचन्द्रः ॥९६॥
इत्थं विमुच्य शयनं बहुवन्दिवृन्दसन्मङ्गलश्रुतिसुखोज्ज्वलभाषितेन ।
प्रातर्विधिं विधिवदाशु विधाय राजा दित्सुर्विचित्र-निलयं स्वयमाजगाम ॥९७
कृत्वाऽर्चनं मुररिपोरथ सन्निविष्टे श्रीवीरभद्रतनुजन्मनि दानगेहम् ।
[उच्चैः स्फुरन्ति तदभीक्षणमदक्षिणानि चक्षूंषि भिक्षुज[न]पक्ष्मललोचनानाम् ॥९८॥

श्रीशत्रुशल्यधरणीन्द्रतुलां निशम्य गच्छत्सु भिक्षुषु भृशं पुलकं वहन्त्यः ।
शून्ये पयोधरघटे मलिने ललाटे श्रोणीतटे च घटयन्ति करं तरुण्यः ॥९९॥
क्षोणीपते वितरति त्वयि काञ्चनानि चिन्तामणित्वमुपगच्छति याचकानाम् ।
काचिद्दरिद्रवनिता वणिजो वधूटीमत्युत्सुकेव परिपृच्छति हारमूल्यम् ॥१००॥
आकर्ण्य किं च कलिकर्ण भवन्तमत्र श्रीशत्रुशल्य-धरणीधव दर्शपारिणम् ।
सा मृन्मयीषु कलशीषु दरिद्रपत्नी स्मेरानना भवति संप्रति मन्दयत्ना ॥१०१॥
देव त्वदीय-बहुदान-पयःपयोधिसंसर्पदम्बुभरभग्नकुटीरदेशाः ।
सर्वा दरिद्रवनिता अत एव तुङ्गसौधाधिरोहणपदं रचयन्ति सद्यः ॥१०२॥
तुलां समारोहति शत्रुशल्ये गौरीभवन्तीर्यशसा दशाशाः ।
पश्यन्ति हृष्यन्ति कृपाभरार्द्रा रुद्राः समुद्रान्तरगीतकीर्तौ ॥१०३॥
त्वं मा रुदस्तनय पुत्र शुचं विमुञ्च क्षुब्धा नवासि (?) भवतां गतमेव दुःखम् ।
आरोहति त्वयि तुलां नृपशत्रुशल्य विश्वासवाक्यमिति भिक्षुकुटुम्बिनीनाम् ॥१०४॥
पुष्णाति यत्र विबुधान् स्वयमेव राजा यत्र स्थिता न हि वदन्ति पराभियोगम् ।
आस्पर्धयत्यमृतपूरितसत्तडागां श्रीशत्रुशल्यनगरीममरावतीं ताम् ॥१०५॥
उद्यत्प्रतापतपनोऽखिललोकमुच्चैरानन्दयञ्जगति विस्तृत-कीर्तिचन्द्रः ।
नक्तन्दिवं जयति निर्जितशत्रुमल्लः श्रीजामवंशतिलकः खलु शत्रुशल्यः ॥१०६॥

आस्ते यस्य समीप एव नगरी द्वारावती श्रीपते-
र्देवो नागविभूषणोऽस्य नगरोपान्तेऽस्ति नागेश्वरः ।
नानाशास्त्रविचारचारुचतुरः श्रीकण्ठनामा द्विजो
यस्यास्ते स चिरायुरस्तु जगति श्रीशत्रुशल्यो नृपः ॥१०७॥
जीयाः श्रीयुतशत्रुशल्य भवतो भूयाद् भवो भूतये
धेयाः सर्वविपक्षमूर्धसु पदं सद्यो विहेयास्तमः ।
मित्रेच्छां परिपूरयेः प्रशमयेर्दारिद्र्यदावानलं
श्रीरामं परिचिन्तयेर्वसुमतीमाकल्पमापालयेः ॥१०८॥
श्रीजामविजयं नाम काव्यं काव्यविदो मम ।
कृपया शोधयन्त्वेतत् सुधियो हि दयालवः ॥१०९॥
दोर्दण्डप्रबलप्रतापतपनव्यापन्नसर्वाहितः
श्रीमज्जामकुलप्रदीप उदितः श्रीशत्रुशल्यो नृपः ।
वाणीनाथकृतेऽस्य जामविजये तत्तद्गुणालंकृते
काव्ये दानविधानवर्णनविधौ सर्गोऽगमत् सप्तमः ॥११०॥

---

## अथ प्रबन्धः

जय जय जामनरेन्द्र भवन्तमहं, महनीयनिदर्शनदानकथं,
कथमप्यनुवर्णित-कर्ण-बलिं, बलि-पूर-समर्चितपूज्यतरं,
तरणिप्रतिकाशप्रतापधरं, धरणीन्द्रपरस्परगीतजयं,
जययुक्त-जनाग्रगणेयपरं, परमप्रियपण्डितपूर्णसभं,
सभयेक्षितसम्मतमन्त्रिजनं, जननावधि नोक्तकठोरगिरं,
गिरिराजसुतासुत-शौर्यहरं, हरमौलि-विभूषण-कीर्तिपटं,
पटलीन-मुखस्थित-दातृभटं, भटलक्ष-निषेवित-पू-प्रघनं,
घनगर्जितमत्तमहेभशतं, शतशः कृतकाञ्चनरत्नतुलं,
तुलना-रहितं गणयामि नृपम् ।

धृत-कार्मुकसंहिततीक्ष्णशरं, शरपातनिपातितशत्रुकुलं,
कुलपद्मविकाशनचण्डकरं, करपद्मसमर्थितभिक्षुजनं,
जनहर्षसुकीर्तितकीर्तिपदं, पदचालन-धर्षित-विश्वतलं,
तलवादन-तोषितशूलधरं, धरणीतल-चित्रितरूपतनुं,
तनुकान्ति-विमुग्धवधूहृदयं, दययार्द्रमुपाञ्चित-कंसरिपुं,
रिपु-भूपनिषेवितपादयुगं, युगबाहुविडम्बितभोगिपतिं,
पतिताश्रुकुलाकुलशत्रुमुखं, मुखपद्मविलोकनहृष्टगणं,
गणनीय-विलं-घनचारुगुणं, गुणकृष्ट-समेतदिगन्तकविं
कविमन्त्रविजित्वरसन्त्रकथं, कथनीयचरित्रपवित्रभुवं
भुवनैकविचक्षणनामनृपं, नृपधर्मतनुं कलये × × ×

इति श्रीवाणीनाथविरचितं जामविजयं नाम काव्यं समाप्तमिति ।

---

## जामविजय-काव्यस्य अकारादिक्रमेण श्लोकसूची
## INDEX OF VERSES

———

## GENERAL INDEX

(KP) here refers to the Introductory section Jāma-Vijaya-Kāvya-paricaya ; figures 1, 2, 3 etc. refer to the pages.

# शुद्धि-पत्रम्

## List of Corrections

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| दानकः | दानकैः | २ | ५ |
| द्विषद्विधोः | द्विषद्विधोः | " | ६ |
| मूध्नि | मूर्ध्नि | " | ७ |
| मूध्निवतिता | मूर्ध्नि वर्तिता | " | २० |
| रेज | रेजु | ४ | २० |
| प्रोद्धरा | प्रोद्धुरा | " | २१ |
| द्रत | द्रुत | " | २५ |
| लङ्कते | लङ्कृते | " | २८ |
| वेशयन्ती | वेशयन्ती | ५ | १३ |
| नेमु | नेमु | " | २६ |
| कीति | कीर्ति | ६ | ४ |
| द्रत | द्रुत | " | १० |
| निराकृतम् | निराकृतम् | " | १२ |
| प्रत्यथि | प्रत्यर्थि | " | १६ |
| ह्रदां | ह्रदां | ७ | १८ |
| जनाना | जनानां | " | " |
| निर्भरं | निर्भरं | ९ | १ |
| मृद्क्ति | मृदूक्ति | १२ | २० |
| शीत-मयूख | शीतमयूख | १४ | ५ |
| द्योतित | द्द्योतित | " | ३० |
| त्रुवाणां | त्रुवाणा | १५ | ६ |
| विधानात् | विधानात | १७ | ३ |
| गह | गृह | १९ | २८ |
| द्रम | द्रुम | " | २९ |
| विशुष्क | विशुष्क | २३ | १ |
| दिद्दत्तुः | दिद्दत्तुः | " | २२ |

| अशुद्धम् | शुद्धम् | पृष्ठे | पंक्तौ |
|---|---|---|---|
| हृदया | हृदयो | २४ | ७ |
| रम[ण] नमत् | रमनमत् | २४ | १६ |
| व्यग्रा | व्यग्रो | " | २२ |
| कश्चन | कश्चन | २५ | १२ |
| कुङ्कम | कुङ्कुम | २६ | ४ |
| संस्पधि | संस्पर्धि | " | ११ |
| प्रिय कीर | प्रिय-कीर | २७ | १७ |
| पूरयन | पूरयन् | २६ | १७ |
| पथ्वीं | पृथ्वीं | " | ३० |
| चलदङ्गली | चलदङ्गुली | ३२ | २ |
| स्पन्दि | स्यन्दि | ३३ | ३० |

३३श-पृष्ठस्थ-शिरोनाम्नि 'जामविजय-काव्यम्' इत्यत्र 'सप्तमः सर्गः' इति पाठ्यम्। एवं ३४श-पृष्ठस्थ-शिरोनाम्नि 'सप्तमः सर्गः' इत्यत्र 'जामविजय-काव्यम्' इति पाठ्यम्।

| | | | |
|---|---|---|---|
| कीति | कीर्ति | ३५ | १५ |
| " | " | ३६ | १२ |
| विलं-घन | विलङ्घन | " | १७ |